# 'टुडे' स्मृतिः

संकलयिता—

**कविराज जगन्नाथ झा शास्त्री**

प्रकाशकः

**श्री वैद्यनाथ झा शास्त्री**

जगन्नाथ स्मारक समित्यध्यक्षः

नेपालराज-संस्कृत महाविद्यालय, मटिहानी

पो॰ मधवारपुर, जि॰ दरभंगा।

वि० सं० २०१४ माघ शुक्ल पञ्चमी

[ मूल्य : २५ नये पैसे

कविराज जगन्नाथ झा शास्त्री

जन्म तिथि : सं० १९९३ ]
कार्त्तिक ३० शनिवार

[ निधन तिथि : सं० २०१३
भाद्र शुक्ल ८ मंगलवार

# संकलयिताका चित्र-परिचय

संलग्न चित्र प्रस्तुत पद्योंके संकलयिता कविराज जगन्नाथ झा शास्त्री का है। आपका जन्म मिथिलाके प्रसिद्ध कुजौली वंशमें ग्राम शाहपुर, पो० लोहट, जिला दरभंगा में हुआ। बालकालमें ही आपकी माता परलोक चल बसीं। बादमें आपके पिताने जो मटिहानीस्थ नेपालराज-संस्कृत-महाविद्यालयके प्राचार्य हैं, वहीं आपका लालन-पालन एवं शिक्षा-दीक्षाका प्रवन्ध किया। आपने पन्द्रह वर्षकी उम्रमें ही आयुर्वेदकी शास्त्री परीक्षा पास कर ली। श्रीनेपाल सरकारने आपकी प्रखर प्रतिभासे प्रसन्न होकर आपको १२०) रुपयेकी मासिक छात्रवृत्ति देकर राजकीय आयुर्वेद महाविद्यालय, पटना भेज दिया। आप वहाँ तृतीय वर्षके छात्र थे। आप इतने प्रत्युत्पन्नमति थे कि जिस यन्त्रको एकबार निरीक्षण कर लेते थे उसकी मरम्मत आप आसानीसे कर सकते थे। गाने-बजाने एवं चिकित्सामें आपकी प्रशंसनीय प्रतिभा थी। आप विनयके मूर्ति एवं लोकसेवाके अग्रदूत थे। परन्तु ऐसे चतुरकी चाह स्वर्गमें भी रहती है। अतः आप गत १९५६ के सितम्बर महीनेकी ११ तिथिको लगभग बीस वर्षकी अल्पायुमें ही सांसारिक लीला समाप्तकर चल बसे। आपके द्वारा संकलित प्रस्तुत पद्योंको हम प्रकाशित कर रहे हैं। इससे यदि आर्य-संस्कृतिका कुछ भी लाभ हुआ और नव्य शिक्षित बाबुओंका कुछ भी सुधार हुआ, तो दिवंगत आत्माको अवश्य शान्ति मिलेगी।

निवेदक :--

अध्यक्ष,

**जगन्नाथ स्मारक-समिति,**

**मटिहानी।**

# दो शब्द

साहपुर-निवासी मेधावी युवक जगन्नाथ झा द्वारा संकलित 'टुडे स्मृति' को मैंने आद्योपान्त पढ़ा ।

इसमें आधुनिक सभ्यताभिमानी व्यक्तियोंका चरित्र-चित्रण अत्यन्त रोचक संस्कृत शब्दोंमें किया गया है । यह प्रतिभाशाली युवकका हृदयोद्गार—इनकी आलोचक दृष्टिमें स्तुतिमुखद्वारा उन परिणामोंकी ओर संकेत करता है, जो भारत जैसे सुसभ्य देशके लिए अनुकूल नहीं है ।

अतः इन मनोरम पद्योंका प्रकाशन भारतीय युवकोंके धूमिल जीवन-पथको आलोकित कर सकेगा ।

साथ ही खेद है कि, ऐसे भावुक युवकका अकाल कवलित होना—उदयकालमें ही अस्तके जैसा प्रतीत होता है; जो सामाजिक क्षतिका द्योतक है ।

**श्रीकृष्ण मिश्र**
*प्रधानाचार्य*
शिवगंगा आयुर्वेद महाविद्यालय
मधुबनी ( दरभंगा )

# "टुडे" स्मृतिः।

## प्रस्तावना

एकदा 'चेयरा'[1] ऽऽसीनं 'टुडे'[2] धर्म्मविदांवरम्।
महर्षि 'फैशनाचार्य्यं' 'जैण्टलमैनाः'[3] समभ्ययुः॥१॥
सम्यग् हुत–'सिगारा' स्ते स 'बूटा' 'हैट' पाणयः।
'गुड् मार्निङ्ग' इति प्रोच्य स्थित्वाऽपृच्छन् सुसादरम्॥२॥
भवान् 'टुडे' धर्म्मविदां वरिष्ठो
'न्यू फैशना' ऽगाधसमुद्रमन्थः।
'रिफार्मराणां'[4], धुरि कीर्त्तनीयोऽ-
स्मान् ब्रूहि सर्व्वं कलिधर्म्मतत्त्वम्॥३॥

'फैशनाचार्य' उवाचः—

शृणुताऽवहिताः सौम्या! 'टुडे' धर्म्मान् कलिप्रियान्।
'एवोल्यूशनथ्यूर्यां'[5] ये नित्यं 'गिर्गिट'रूपिणः॥४॥

### सृष्टिक्रमः

जलेषु 'हर्कतो' जज्ञे मत्स्या 'हर्कत' सम्भवाः।
त एव जाता मण्डूका अथ ते पक्षिणोऽभवन्॥५॥
पक्षिभ्यः पशवो जातास्तेऽपि वानरतां गताः।
घृष्टपुच्छा वानरास्ते नरा लोकेऽस्मदादयः॥६॥

### धर्म्माचार्य्याः

'लूथरो' 'डार्विन' श्चैव 'वेनो' 'रायश्च' 'कापड़ी'।
'गौड़ः' 'शारद' एते हि कलिधर्म्मप्रवर्त्तकाः॥७॥

---

१—कुर्सी। २—आधुनिक। ३—भद्रपुरुष। ४—सुधारक। ५—मानव-विकास सिद्धान्त।

धर्म्मलक्षणम्

'लेडी' 'फ्रैण्ड्स'[1] 'समाचाराः' 'स्वस्य च प्रियमात्मनः'।
एतच्चतुर्विधं प्राहुः 'टुडे' धर्म्मस्य लक्षणम् ॥८॥

प्रामाण्याप्रामाण्ये

'मन्थली'[2] 'वीकली'[3] 'डेली'[4] पत्रैर्'युरोप' निःसृतैः।
यत्किञ्चिल्लिख्यते तद्धै स्वतः प्रामाण्यमर्हति ॥९॥
वेदशास्त्रपुराणेषु 'ओल्ड फैशन' मानवैः।
यदुक्तं तन्न संसेव्यं 'टुडे' धर्म्मविरोधि तत् ॥१०॥

वर्णविचारः

विप्रक्षत्रियविट्शूद्रा वर्णा ये 'पोप' कल्पिताः।
'अनेचरत्वाद्'[5] 'डर्टि'[6] त्वादप्रत्यक्षाद् वृथैव ते ॥११॥
श्वेतश्यामौ तु वर्णौ द्वौ 'नेचुरल्'[7] परिकीर्त्तितौ।
'यूरोपे' लभ्यते 'श्वेतः' 'इण्डियादिषु'[8] 'श्यामकः' ॥१२॥
तयोर्धर्मान् प्रवक्ष्यामि यथाशास्त्रं निबोध तान्।

गौरवर्णधर्माः—

'श्वेत'श्च जायमानो हि पृथिव्यामधिजायते।
उत्पत्तिरेव 'श्वेत'स्य मूर्त्तिर्धर्म्मस्य शाश्वती ॥१३॥
'ह्विस्की'[9] च 'मीट'[10] 'डांसानि'[11] 'नो विकेंसी'[12] च 'साइनः'[13]
आज्ञादानं परेभ्यश्च षट्कर्म्मा 'गौर' उच्यते ॥१४॥
यक्षरक्षःपिशाचान्तं मद्यं मांसं सुरासवम्।
गौराङ्गानां न दोषाय वह्नेः सर्वभुजो यथा ॥१५॥

---

१—मित्रगण। २—मासिक। ३—साप्ताहिक। ४—दैनिक। ५—अप्राकृतिक (नेचर–Nature)। ६—गंदा। ७—प्राकृतिक। ८—भारतमें। ९—एक प्रकारकी शराब। १०—मांस। ११—नाच। १२—जगह खाली नहीं है। १३—चिह्न।

कृष्णावर्णधर्म्माः—

'गौरो'च्छिष्टं 'पलेटे'षु भोजनं 'प्लीज'[१] 'येस सरः'[२] ।
गौरानुकरणायासः 'श्याम' कर्म्म स्वभावजम् ॥१६॥
सर्वेषामेव दानानां 'थैंक यू'[३] दानं विशिष्यते ।

इति श्री फैशनाचार्य्यकृतायां 'टुडे' स्मृतौ सामान्यधर्म्मनिरूपणं नाम प्रथमोऽध्यायः ॥

## अथ दिनचर्य्या

### प्रातःस्मरणम्

करारविन्देन 'सिगार' वृन्दं
मुखारविन्दे विनिवेशयन्तम् ।
'स्प्रङ्गदार' सच्-'चेयर' केशयानं
'गौरं' महः 'सर्विस'[४] दं नमामि ॥१८॥

### प्रभातकृत्यम्

प्रातरुत्थाय मञ्चस्थो 'लाला' क्लिन्नमुखः पुमान् ।
'टी[५]' 'काफी[६]' 'बिस्कुटं' 'केकं[७]' सेवयेन्नित्यमेव हि ॥१९॥
पुनः शयीत उषसि आयुरारोग्यकाम्यया ।
'आफिसः' 'टाइमो' यावन्न भवेत्तावदेव हि ॥२०॥

### मलमूत्रत्यागविधिः

यथाकालं समुत्थाय कराभ्यां चक्षुषी मृजन् ।
'उत्तिष्ठन्' मूत्रविट्त्यागं कुर्य्यात् 'पिटककूबरे' ॥२१॥

---

१—कृपया । २—जी, महाशय । ३—धन्यवाद आपको । ४—नौकरी ।
५—चाय । ६—कहवा ( एक प्रकारका पेय ) । ७—रोटी ।

### शुद्धि प्रकारः।

द्वित्रैश्च 'कर्ग्गजैः' पश्चात् गुदं संशोधयेद्बुधः।
न करेण स्पृशेन्नीरं यदीच्छेच्छुभमात्मनः ॥२२॥

### नित्यकर्म।

'बूटे' 'सलीपरे'[1] 'शूजे'[2] 'पैंपे'[3] 'चपकले' तथा।
'फुल् सलीपर' 'गुर्गाव्यां, नित्यं कुर्य्यात् सुपालिशम् ॥२३॥

### क्षौरे मतद्वयम्।

'सेफ्टीरेजर' यन्त्रेण श्मश्रु कृन्तेत् सकूर्च्चकम्।
नासारन्ध्राग्रदेशे वा रक्षयेन्मक्षिकासमम् ॥२४॥

### स्नानविधिः।

साप्ताहिकं शीतकाले ग्रीष्मकाले यथारुचि।
नग्नः 'टीनटबे' कुर्य्यात् स्नानं 'सोप'[4] समन्वितम् ॥२५॥

### दन्तधावनम्।

अश्ववैराश्वतरैर्बालैर्गार्दभैर्निर्म्मितेन वा।
ब्रूशेन[5] घर्षयेद् दन्तान् मूलतः शोधनेच्छया ॥२६॥

### 'जैण्टिलमैन' कवचम्।

ततो 'जैण्टिलमैनेन' कवचेनाऽऽवृतोभवेत्।
येन गुप्तोऽन्यथासिद्धः पञ्चमोऽपि महीयते ॥२७॥
पादौ 'बूट' धरः पातु गुल्फौ 'जुराब' जूड़ितः।
नितम्बौ जानुनी जंघे पातु मे 'पतलून' धृक् ॥२८॥

१—जूता। २—एक प्रकार का जूता। ३—चट्टी। ४—साबुन। ५—ब्रश।

कटिं 'पेटं' 'पेटिका' च 'सेफ्टीलेदर'[१] गुह्यकम् ।
'तस्मेतग' ततः स्कन्धौ, द्वन्मे 'वैस्टैण्डवाच् तथा ॥२९॥
'टाई' 'बो' 'कालर' ग्रीवां 'दस्ताने' पान्तु चाङ्गुलीः ।
मणिबन्धं 'रिष्टवाचः' करौ 'बटन' 'स्टडे'[२] ॥३०॥
मुखं मे 'पौडरः' पातु नेत्रे 'न्यूफ्रेम ऐनकः'
काकपुच्छोऽवताद् भालं मूर्धानं 'हैट'[३] रक्षतु ॥३१॥
कायं 'कोटकमीजौ' मे सर्व्वतः पातु 'ओवरः'[४]
नासामलं 'रुमालश्च' घ्राणम् 'ओटोलवेण्डरौ'[५] ॥३२॥

इति श्रीफैशनाचार्य्यकृतायां 'टुडे' स्मृतौ
दिनचर्य्यानिरूपणं नाम द्वितीयोऽध्यायः ।

भक्ष्याऽभक्ष्यनिर्णयः ।

यदुत्थानयितुं शक्यं क्षेप्तुं निर्गलितुं तथा ।
तत्सर्व्वं 'नेचुरल' भक्ष्यमभक्ष्यं त्वितरन्मतम् ॥३३॥
'टेबुलं' पुरतो धृत्वा 'चेयर' स्थगुदः पुमान् ।
'सूटिडो' 'बूटिडो'ऽश्नियात् 'छुरिका-कण्टका'ऽन्वितः ॥३४॥
'बराण्डीं'[६] 'बिस्सकीं'[७] 'पेगं' मध्ये मध्ये पिबेन्मुहुः ।
कुक्कुटाण्डञ्च फलवद् ग्राह्यं सर्व्वेषु कर्म्मसु ॥३५॥

इतरे आचाराः ।

न शिखां धारयेत् प्राज्ञः 'टेनिसे' हास्यकारिणीम् ।
न सूत्रं बिभृयात् स्नाने सोपमर्दनरोधकम् ॥३६॥
'पपी पपी'[८] समुच्चार्य्य प्रेम्णा 'सिटी' समन्वितः ।
करेण चुटकीं दत्वा रक्षेत् कुक्कुरशावकम् ॥३७॥

---

१—एक प्रकारका पहनावा । २—कमीजका दबानेवाला बटन । ३—टोप । ४—ओवरकोट । ५—सेण्ट । ६, ७—एक प्रकारकी शराब । ८—कुत्तेका प्रिय संबोधन ।

न वदेद् भारतीं भाषां प्राणैः कण्ठगतैरपि ।
हस्तिना ताड्यमानोऽपि न गच्छेद् 'देवमन्दिरम्' ॥३८॥

नव्यशिक्षित-समाचाराः ।

अधीत्य डार्विनथ्योरीं पठित्वा हाक्सले मतम् ।
अहो ! श्रमस्य वैयर्थ्यमात्मापि कलितो न हि ॥ ३९ ॥
चातुर्य्यं चाकरीमात्रे कौशलं 'बूटपालिशे'
भाले लिखति चैतावत् शिक्षा पाश्चात्यचालिता ॥ ४० ॥
बी०ए०पर्यन्तशिक्षायां सहस्राणान्तु विंशतिः ।
व्ययीभवति चित्तन्तु केवलं दासवृत्तये ॥ ४१ ॥
यदि वार्धुषिकादेतत् धनमादाय पठ्यते ।
अष्टाणक्यैव वृद्धिः स्यात् प्रतिमासं शतं शतम् ॥ ४२ ॥
एम०ए०पर्य्यन्तमुत्तीर्ण इतिहासे प्रतिष्ठितः ।
छात्रो वक्तुं न शक्नोति भीष्मः कस्य सुतोऽभवत् ॥ ४३ ॥
आङ्गलानान्तु को राजा कियद्वारं व्यमूत्रयत् ।
इति सर्व्वं विजानाति न जानाति स्वकं गृहम् ॥ ४४ ॥

इति फैशनाचार्यकृतायां 'टुडे' स्मृतौ
तृतीयोऽध्यायः ।

---